

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## SHIKSHA -2





ॐ

॥ जयतु भारतम् - जयतु भारती ॥

# संस्कृत भारती

## SAMSKRITA BHARATI

"Aksharam" 8th Cross, II Phase, Girinagar
Bangalore-560 085. Ph.: 6721052

Serial No.

## शिक्षा - २

॥ मनो हि हेतुः सर्वेषाम् इन्द्रियाणां प्रवर्तने ॥

Mind is the cause of all the activities of sense organs.

-Ramayana

### द्वितीयः पाठः

### १. कृदन्ताः

अ) द्वितीया-विभक्तिः (पुंलिङ्गे) ।

The previous lesson taught the nominative forms पठन्, गच्छन्, (one who is reading, one who is going) and such other participles. Let us proceed to learn the singular and plural forms of the same in the accusative case. These participles are usually adjectives qualifying other nouns.

Study these sentences.

१. पिता पठन्तं बालं दृष्ट्वा हृष्टवान् ।

(The father was delighted to see the boy reading.) The participle पठन्तं is in accusative case as it qualifies the noun बालम् ।

२. जनाः वनं गच्छन्तं रामम् अवलोक्य[1] रुदितवन्तः[2] ।

३. आरक्षकाः[3] अपहरन्तं चोरं बद्धवन्तः ।

४. सः पतन्तं बालं दृष्ट्वा हसितवान्[4] ।

५. व्याप्नुवन्तं[5] मेघं दृष्ट्वा मयूराः नर्तितवन्तः ।

६. धावन्तं मृगं[6] रामः अनुसृतवान् ।

७. नृत्यन्तं मयूरम् अवलोक्य सर्पाः पलायितवन्तः[7] ।

८. नवनीतं[8] चोरयन्तं कृष्णं गोपी भर्त्सितवती[9] ।

९. अर्चयन्तं भक्तं देवः अनुगृहीतवान् ।

१०. उत्तरम् अजानन्तं[10] छात्रं गुरुः उत्थापितवान्[11] ।

११. गायन्तं गायकं जनाः प्रशंसितवन्तः ।

१२. क्रीडतः[12] बालकान् पश्यतु ।

१३. तूष्णीं तिष्ठतः कर्मकरान्[13] यजमानः आक्षिप्तवान् ।

१४. सम्यक् वदतः बालकान् आचार्यः श्लाघितवान्[14] ।

१५. वेदं रक्षतः पण्डितान् को वा न मानयति[15] ?

१६. निन्दतः दुर्जनान् जनाः दूरीकुर्वन्ति ।

१७. विषयं स्मरन्तं भाषणकारं दृष्ट्वा सर्वे हसितवन्तः ।

१८. न्यायम् अनुसरतः अधिकारिणः सर्वे आद्रियन्ते ।

१९. लिखतः छात्रान् मा आह्वय[16] ।

२०. मार्गं पृच्छन्तं पान्थं[17] प्रति मार्गं दर्शितवान् ।

### आ) Neuter gender - I and II case.

We already know that the word पठन् is in masculine gender. This word becomes पठत् in neuter gender. First and second cases of neuter gender are different from those of masculine gender. From third case onwards the forms of neuter gender and masculine gender are same. In the following sentences first and second cases of neuter gender are used.

---

[1]on seeing, [2]wept, [3]police, [4]laughed, [5]spreading, [6]deer, [7]ran away, [8]butter, [9]scolded, [10]not knowing, [11]made him stand, [12]the boys playing, [13]workers, [14]praised [15]respects, [16]do not call, [17]Traveller.





1. **प्रथमाविभक्तिः**

१. उद्याने पुष्पं विकसत् अस्ति ।

(The flower is blossoming in the garden.) Here the word पुष्पं is neuter gender. विकसत् is an adjective to पुष्पम् । Therefore it is also in neuter gender.

२. संस्कृतप्रचारकार्यं सम्यक् प्रचलत् अस्ति ।

३. भवतः अध्ययनं कथं प्रचलत् अस्ति ?

४. वृक्षात् पर्णं पतत् अस्ति ।

५. यन्त्रागारे[1] यन्त्रं शब्दं कुर्वत् अस्ति ।

६. जलबन्धात्[2] जलं निर्गच्छत् अस्ति ।

७. चुल्लेः[3] उपरि पात्रे स्थितं क्षीरम् उद्गच्छत्[4] अस्ति ।

८. आकाशे नक्षत्राणि स्फुरन्ति सन्ति ।

९. मार्गे यानानि गच्छन्ति सन्ति ।

१०. वृक्षात् पतन्ति पर्णानि वायुना दूरं नीतानि ।

११. शब्दं कुर्वत् लोकयानं[5] मार्गे अतिष्ठत् ।

१२. नश्यत् वस्त्रं निर्धने खेदं जनयति ।

१३. विमानं शब्दं कुर्वत् आकाशात् अपतत् ।

१४. लोके प्रचलन्ति युद्धानि शान्तिप्रियाणां हृदये खेदं जनयन्ति ।

१५. स्फुरत्[6] नेत्रं शुभम् अशुभं वा सूचयति ।

2. **द्वितीयाविभक्तिः**

१. नगरम् आगतः ग्रामीणः वेगेन गच्छन्ति यानानि दृष्ट्वा आश्चर्यचकितः ।

२. उद्याने विकसन्ति पुष्पाणि पश्यन्तः जनाः सन्तोषम् अनुभवन्ति ।

३. मानवः नश्यत् वस्त्रं यथा त्यजति तथा आत्मा नश्यत् शरीरं त्यजति ।

४. वृक्षात् पतन्ति आम्रफलानि बालाः सङ्गृह्णन्ति[7] ।

५. पतनात् जातात् व्रणात् स्रवत् रक्तं दृष्ट्वा बालः रोदनं कृतवान् ।

---

1. In the factory 2. From the dam 3. Of the fire-place
4. Going upward 5. Bus. 6. Throbbing 7. Collect

६. सम्यक् कार्यम् अकुर्वत्[8] यन्त्रं तन्त्रज्ञः[9] समीकरोति ।
७. युद्धकाले आकाशे गच्छत् शत्रुविमानं सैनिकाः पातयन्ति[10] ।

## शतृ - शानच् Suffixes.

In the previous lessons we saw some sentences containing the words पठन् (पुं) and पठत् (नपुं). The words like पठत्, गच्छत् etc. are called शत्रन्त (ending with suffix शतृ)

Rules of शतृ (अत्) suffix

1. To express the meaning of present continuous or past continuous this शतृ प्रत्यय is employed. In this suffix, only अत् remains at the end. This suffix is added to the root of the verb.

   ex - पठ् + शतृ (अत्) = पठत्
   लिख + शतृ (अत्) = लिखत्
   क्रीड + शतृ (अत्) = क्रीडत्

2. This suffix is added to the परस्मैपदि verbroots only. A suffix शानच् (in the same meaning) is added to आत्मनेपदि verbroots. (we are going to learn about this suffix in the coming lessons.)

3. This कृदन्त word ending with शतृ is used in three genders.

   ex - पठत् - पठन् (पुं)
   पठन्ती (स्त्री)
   पठत् (नपु)

4. In each gender it has three numbers and seven cases. (We will see the examples of these in the following lessons.)

   Here all form, of शत्रन्त word in three genders are given.

   (To learn by heart)

---

8. Not working. 9. Engineer. 10. Cause to fall.





1. तकारान्तपुंल्लिङ्गः 'पठत्'शब्दः -

| | ए.व. | द्वि. व. | ब.व. |
|---|---|---|---|
| प्र.वि. | पठन् | पठन्तौ | पठन्तः |
| द्वि.वि. | पठन्तम् | पठन्तौ | पठतः |
| तृ.वि. | पठता | पठद्भ्याम् | पठद्भिः |
| च.वि. | पठते | पठद्भ्याम् | पठद्भ्यः |
| पं.वि. | पठतः | पठद्भ्याम् | पठद्भ्यः |
| ष.वि. | पठतः | पठतोः | पठताम् |
| स.वि. | पठति | पठतोः | पठत्सु |
| सम्बो. | हे पठन् | हे पठन्तौ | हे पठन्तः |

2. ईकारान्तस्त्रीलिङ्गः 'पठन्ती'शब्दः -

| | | | |
|---|---|---|---|
| प्र. | पठन्ती | पठन्त्यौ | पठन्त्यः |
| द्वि. | पठन्तीम् | पठन्त्यौ | पठन्तीः |
| तृ. | पठन्त्या | पठन्तीभ्याम् | पठन्तीभिः |
| च. | पठन्त्यै | पठन्तीभ्याम् | पठन्तीभ्यः |
| पं. | पठन्त्याः | पठन्तीभ्याम् | पठन्तीभ्यः |
| ष. | पठन्त्याः | पठन्त्योः | पठन्तीनाम् |
| स. | पठन्त्याम् | पठन्त्योः | पठन्तीषु |
| सम्बो. | हे पठन्ति | हे पठन्त्यौ | हे पठन्त्यः |

3. तकारान्तनपुंसकलिङ्गः 'पठत्'शब्दः -

| | | | |
|---|---|---|---|
| प्र. | पठत् | पठन्ती | पठन्ति |
| द्वि. | पठत् | पठन्ती | पठन्ति |

(From third case onwards it should be declined like पुंल्लिङ्ग word.)

All शत्रन्त words like गच्छत् (गच्छन्, गच्छन्ती, गच्छत्) लिखत् (लिखन्, लिखन्ती, लिखत्) etc. should be declined in the same way.

**Note** - The forms like गच्छन्ति लिखन्ति etc. may confuse you. To avoid such confusion please observe the following examples and note the difference in the meaning.

1. गच्छन्ति = They go (Present tense, First person plural)
   ex. बालकाः विद्यालयं गच्छन्ति ।
   The boys go to school.

2. गच्छन्ति = going (शत्रन्त, Neuter gender, प्रथमा / द्वितीया plural)
   उदा - अ) गच्छन्ति यानानि मया दृश्यन्ते ।
   Going Vehicles (The Vehicles which are going) are seen by me.
   आ) गच्छन्ति यानानि अहं पश्यानि ।
   I see the going vehicles.

   In the first example गच्छन्ति is a verb. In the second गच्छन्ति (going) is an adjective to another word यानानि (vehicles) and there is a separate verb in the sentence. Observing all these things you can make out the difference between these two examples.

3. गच्छन्ती = Going (शत्रन्त, feminine gender प्रथमा, एकवचन)
   ex. बालिका गच्छन्ती अस्ति
   The girl is going.

   (Here गच्छन्ती is an adjective to a word of feminine gender (i.e. बालिका and is ईकारान्त)

## २. पदसङ्ग्रहः

गण- To Count

१. गणयति, २. गण्यते, ३. गणयिष्यति
४. गणयितव्यम् - गणनीयम्, ५. गणितः - गणिता - गणितम्





६. गणितवान् - गणितवती ७. अ)गणयन् - गणयन्ती, आ)गणयमानः
८. गणयित्वा - विगणय्य, ९. गणयितुम् ।

चर् - to graze, to eat, to roam

१. चरति, २. चर्यते, ३. चरिष्यति
४. चरितव्यम् - चरणीयम्, ५. चरितः - चरिता - चरितम् ६.चरितवान् - चरितवती, ७. चरन् - चरन्ती
८. चरित्वा - प्रचर्य, ९. चरितुम् ।

चिञ् - to collect

१. चिनोति, २. चीयते, ३. चेष्यति
४. चेतव्यम् - चयनीयम्, ५. चितः - चिता - चितम् ६. चितवान् - चितवती, ७. चिन्वन् - चिन्वती
८. चित्वा - विचित्य, ९. चेतुम् ।

चिति (चिन्त्) - to remember

१. चिन्तयति, २. चिन्त्यते, ३. चिन्तयिष्यति
४. चिन्तयितव्यम् - चिन्तनीयम्, ५. चिन्तितः - चिन्तिता - चिन्तितम्,
६. चिन्तितवान् - चिन्तितवती
७. अ) चिन्तयन् - चिन्तयन्ती, आ) चिन्तयमानः
८. चिन्तयित्वा - विचिन्त्य, ९. चिन्तयितुम् ।

छिदिर् - to cut into pieces

१. छिनत्ति, २. छिद्यते, ३. छेत्स्यति
४. छेत्तव्यम् - छेदनीयम्, ५. छिन्नः - छिन्ना - छिन्नम् ६. छिन्नवान् - छिन्नवती, ७. छिन्दन् - छिन्दती
८. छित्वा - विच्छिद्य, ९. छेत्तुम् ।

## ३. प्रहेलिका

राजन् ! कमलपत्राक्ष ! तत्ते भवतु चाक्षयम् ।
आसादयति यद्रूपं करेणुः करणैः विना ॥

Oh ! lotous eyed king ! May you have in plenty of that form of karenu (she-elephant) with out karanas (sense organs)

**Answer** - From the word करेणु, if the consonants like क्, र्, ण्, are removed, the form that remains is अ+ए+उः । अ+ए=ऐ+उः - आयुः so, the verse means "May you live long oh king".

## ४. सुभाषितम्

दानं भोगो नाशस्तिस्रो[1] गतयो[2] भवन्ति वित्तस्य ।
यो[3] न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति[4] ॥

पदविभागः -

दानं, भोगः, नाशः, तिस्रः, गतयः, भवन्ति, वित्तस्य । यः, न, ददाति, न, भुङ्क्ते, तस्य, तृतीया, गतिः, भवति ।

तात्पर्यम् -

There are three ways of spending money. Charity, enjoyment and loss. A person who neither gives charity nor enjoys will loose his money.

अन्वयार्थः -

वित्तस्य दानं भोगः नाशः - तिस्रः गतयः भवन्ति There are three courses to money. Charity, enjoyment and loss. यः न ददाति न भुङ्क्ते तस्य तृतीया गतिः भवति - If a person neither gives nor enjoys himself, his money will take the third course. i.e., loss.

---

1. तिस्रः + गतयः 2. गतयः + भवन्ति 3. यः + न 4. गतिः + भवति ।





## ५. काव्यकथा

## मित्रालोचनम्

यदा नारदमुनिः द्वारकानगरात् निवृत्तवान्, *तदैव इन्द्रप्रस्थनगरात् युधिष्ठिरः अन्यं[1] सन्देशं श्रीकृष्णाय प्रेषितवान् । युधिष्ठिरः राजसूययागं कर्तुं सङ्कल्पं कृतवान् आसीत् । यागस्य मध्ये *विघ्नो भवति इति धर्मराजः भीतः आसीत् । अतः सः श्रीकृष्णम् आहूतवान्[2] ।

श्रीकृष्णः चिन्तितवान् । 'एकत्र देवकार्यम्, अन्यत्र बन्धुकार्यम् ।' किं करोमीति सन्देह* उत्पन्नः । समस्यां परिहर्तुं[3] सः मन्त्रालोचनं[4] कर्तुं निश्चितवान् । ज्ञानवृद्धः उद्धवः अग्रजो* बलरामश्च आगतवन्तौ । त्रयो[5] *मिलित्वा मन्त्रालोचनम् अकुर्वन्[6] ।

श्रीकृष्णः ''नारदमहर्षिः देवेन्द्रस्य सन्देशं गृहीत्वा आगतवान् । दुष्टशिशुपालस्य वधः करणीयः[7] इति सूचितवान् । *युधिष्ठिरो यागाय माम् आहूतवान् । तस्य विघ्नभयम् अस्ति । एवं कार्यद्वयं सम्प्राप्तम् । धर्मराजस्य अनुजाः वीराः, शूराश्च । तस्मात् धर्मराजः तेषां साहाय्येन [8] यागं करोति । शिशुपालस्तु दुष्टो* दिने दिने वर्धते[9] । नीतिकाराः वदन्ति ''व्याधिः, तथा वर्धमानः शत्रुः *नोपेक्षणीयः[10]'' इति । अयं *ममाभिप्रायः । अत्र युक्तायुक्तं[11] विचार्य कथयन्तु'' इति उक्तवान् ।

## ६. अन्वयरचनाक्रमः

The first lesson contained the prose order of "Anjaneya's Advice" from Valmiki's Ramayana. Here we give "viduraneethi" an extract from "Udyoga parva" of Mahabharatha.

---

1. another, 2. had invited, 3. to solve, 4. confidential discussion, 5. three, 6. did 7. should be done, 8. help, 9. is getting stronger, 10. should not be neglected, 11. right and wrong.

---

तदा+एव, विघ्नः+भवति, करोमि+इति, सन्देहः+उत्पन्नः अग्रजः+बलरामः+च, त्रयः+मिलित्वा, युधिष्ठिरः+यागाय, दुष्टः+दिने दिने, न+उपेक्षणीयः, मम+अभिप्रायः

After twelve years of exile Yudhishtira, his brothers and Draupadi spent a year in Viratas kingdom, incognito. Duryodhana, in order to expose the Pandavas in disguise, ceases the cattle of Virata. Arjuna, along with Uttara Kumara, fights the Kauravas and takes the cattle back. Duryodhana claims that he has identified the Pandavas before the thirteenth year is over and that as per their earlier commitment they must once again go to the forest. Bhisma then calculates the time and says that the thirteenth year has ended. Uttara the daughter of Virata is married to Abhimanyu, the son of Arjuna. Yudhishtira then asks Duryodhana to give his rightful share of the kingdom. But Duryodhana refuses to give. Once again, Yudhishtira sends Sanjaya for a discussion. Sanjaya comes to the capital of Hastinavathi, meets Dhritarashtra in his palace and tells him that the next day in court he would convey the message of Yudhishtira. Dhritarashtra is worried by this and is unable to sleep that night. He sends word for Vidura-

**1. द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।**
**विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥**

**पदविभागः -**

द्वाःस्थम्, प्राह, महाप्राज्ञः, धृतराष्ट्रः, महीपतिः, विदुरम्, द्रष्टुम्, इच्छामि, तम्, इह, आनय, मा, चिरम् ॥

**तात्पर्यम् -**

Emperor Dhritarashtra told the door keeper- "I want to see Vidura, get him here without delay".

**अन्वयरचना -**

प्राह - told

कः प्राह ? धृतराष्ट्रः - कर्तृ
कीदृशः ? धृतराष्ट्रः - महीपतिः
पुनः कीदृशः ? महाप्राज्ञः
कं प्राह ? द्वाःस्थं - कर्म





आनय - bring

कम् आनय ? तम्
कुत्र आनय ? इह

इच्छामि - I desire

किं कर्तुं ? दृष्टुम् । चिरं - delay. मा - do not
कं द्रष्टुम् ? विदुरं ।

Dhritarashtra's attendant goes to Vidura and conveys the message. Vidura comes to the door of Dhritarashtra. Then the servant says-

**2. विदुरोऽयमनुप्राप्तो राजेन्द्र ! तव शासनात् ।**
**द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ।**

**पदविभागः -**

विदुरः, अयम्, अनुप्राप्तः, राजेन्द्र, तव, शासनात्, द्रष्टम्, इच्छति, ते, पादौ, किम्, करोतु, *प्रशाधि, माम् ।

**तात्पर्यम् -**

Oh King ! As ordered by you Vidura is here. He desires to see your majesty (lit - your feet). Please instruct me what he should do now.

Write the Anvayarachana of the above verse. Study the rules of Anvayarachana before writing it.

On hearing the words of the servant, Dhritarashtra said as follows-

---

प्रशाधि - order (verb)

3. प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने ॥

**पदविभागः**

प्रवेशय, महाप्राज्ञम्, विदुरं, दीर्घदर्शिनम्, अहम्, हि, विदुरस्य, अस्य, न, अकल्पः, जातु, दर्शने ।

**तात्पर्यम्**

Bring in Vidura who has foresight, very wise. I am never unable to see him.

**अन्वयरचना**

प्रवेशय - Bring in

कः ? (त्वं) - कर्तृ

कम् ? विदुरम् - कर्म

कीदृशं विदुरम् ? महाप्राज्ञम्

पुनः कीदृशम् ? दीर्घदर्शिनम्

न अस्मि - I am not.

कः ? अहम्

कीदृशः अहम् ? अकल्पः

कुत्र अकल्पः ? दर्शने

कस्य दर्शने ? विदुरस्य

कीदृशस्य विदुरस्य ? अस्य

कदा अकल्पः ? जातु

**विशेषः**

1. When a shloka has the pronouns अहं or वयं and has no verb, अस्मि or स्मः must be understood.
2. If a verb has कालवाचि अव्ययम्, (indeclinable which indicates time) the question कदा (when) is put in the अन्वय ।





eg. दिवा गच्छति, goes in the morning.
गच्छति - कदा गच्छति ? - दिवा

**अन्वयः**

दीर्घदर्शिनम् महाप्राज्ञम् विदुरम् (त्वम्) प्रवेशय ।
[1]जातु अस्य विदुरस्य दर्शने अहम् [2]अकल्पः न अस्मि ॥

Write the word to word meaning of the above verse by yourself.

## ७. सन्धयः

## ष्टुत्वसन्धिः

तत् + टीका - तट्टीका

दलाः (स्) + षट् - दलाष्षट्

धनुस् + ठेङ्कारः - धनुष्ठेङ्कारः

In the above examples सकार and तवर्ग are replaced by षकार and टवर्ग when they come in contact with the latter.

## ८. सङ्ग्राह्यविषयाः

Stanzas to be recited in the morning.
(looking at the hands)

कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।
करमूले सदा गौरी प्रभाते करदर्शनम् ॥

Godess Lakshmi resides at the end of the hands, Saraswathi in the middle, Gouri at the lowest part. Therefore it is auspicious to look at the hands in the early morning.

(Salutations to Sun)

---

1. Always. 2. Incapable, unprepared

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

Lord Suryanarayana is seen in the middle of the orb of the sun. He is sitting on a lotus throne, wearing armlets, ear-rings, (in the shape of crocodile) crown, necklace. He is shining like gold and holding Shankha and Chakra. We should always meditate him.







ॐ

## हिन्दु सेवा प्रतिष्ठानम्, संस्कृत विभागः

## पत्रालयद्वारा संस्कृतम्

Reg. No. [ ]

## शिक्षा

### द्वितीयः पाठः - प्रश्नाः

1. Translate the following sentences into Samskrit.

   1. A boy who was running fell down.
   2. He saw a dancing peacock.
   3. Did you see Maitra cooking ?
   4. They caught the thief stealing.
   5. Call the student who is running.

2. Split up the words and name the sandhi.

   सच्चित्, सर्पिष्टमम्, गुणिज्ञयः

3. Write the अन्वयरचना of the following.

   १. सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
   शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥

   (People commit sin even for the sake of the body which is the abode of all dirty things, ungrateful and perishable.)

   २. एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
   भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥

   Some one follows the evil courses and many people enjoy the benefit of it. Those who enjoye will escape; but the doer is stained with the sin. (Think of the story of Valmiki).

